समा-गता महा-भागा सीता चाऽपि यशस्विनी[1] ।[2]
N] कथां[3] रामायणं श्रुत्वा प्राऽऽप्नोति प्रिय-सङ्गमम् ॥१९॥ [N
शृण्वतः पठतश् चैव[4] सर्वं पापं प्र-णश्यति ।[5] [N
महीं वि-जयते राजा शत्रुश्[6] चाऽस्य वि-नश्यति[6] । [१०८पू
N] श्रुत्वा काव्यम्[7] इदं[8] पुण्यं दीर्घम् आयुश् च विन्दति ।२०।[११०पू
श्रुत्वा रामायणं यो वै भूमि-दानं समा-चरेत् ।
N] स भवेत् पृथिवी-पालश् चक्र-वर्ती पुनः पुनः ॥२१[8]॥[N
गो-भूमि-रत्न-वासांसि भोगांश् च विपुलांस् तथा ।
N] दातव्यं श्रद्-दधानेन ह्य् अ-क्षयं स्वर्गम् इच्छता ॥२२[8]॥ [N
इमं च[9] वि-जयं चित्रं[10] रामस्याऽक्लिष्ट-कर्मणः ।
N] लोक-नाथस्य कृत्स्नस्य सर्वे प्राऽञ्जलयो नराः[11] ॥[12]२३॥[N
शृण्वन्ति लोके य[13] इदम्[13] आर्षं वाल्मीकिना कृतम् ।
N] रामस्य चरितं रम्यं नाऽस्ति तेषां परा-भवः ॥२४॥ [N
N] समा-गमं प्र-वासिनां[14] लभन्ते[15] चाऽपि बान्धवाः[16] ।
१६उ] प्राऽर्थितांश् च वरान् सर्वान्[17] आप्नुवन्ति[17] यथेप्सितान् ॥२५॥[११२
श्रवणेन सुराः सर्वे प्रीयन्ते[18] पठनात्[18] तथा ।
वि-नायकाश् च शाम्यन्ति गृहे तिष्ठन्ति[19] यस्य[20] वै । [११३
N] आर्तवे च[21] स्त्रियः श्रुत्वा प्र-सूयन्ते सुताञ् छुभान् ।२६।[११४उ
पूजयंश् च पठंश् चेदं[22] शृण्वञ्[22] च श्रद्-दधन्[23] नरः ।
N] सर्व-पाप-विमुक्ताऽऽत्मा[24] दीर्घम् आयुर् अवाऽऽप्नुयात् ॥२७[25]॥[११५

---

१. ल१ ल२ ब प्र–तपस्विनी । २. भ–नास्ति । ३. रा२ फ भ–तथा । म–एवं ॥ ४. ल१ ल२ ब प्र–चापि । ५. रा२ भ–नास्ति । ६. ल१ ल२ ब प्र–०श्चापि वि० । फ म–शत्रूंश्चाप्यधितिष्ठति । ७. फ म–रामायणं ॥ ८. फ म भ–नास्ति ॥ ९. रा२ फ म भ–तु । १०. फ म–श्रुत्वा । ११. रा२ भ–नृपाः । १२. फ म–अत आरभ्य २७-शश्लोकं यावन्नास्ति ॥ १३. रा२ भ–ये चेदं ॥ १४. रा२ भ–वर्जं—०सिम्यो । १५. रा१ ल१ ल२ ब अ–लभते । प्र–लभ्यते । १६. रा१ अ–मानुषः । ल१ ल२ ब अ प्र–०वैः । १७. रा२ भ–भोगान् प्राप्नु० । १८. रा२ भ–वर्जं—प्रसन्ना वरदास्तु । १९. प्र रा२ भ–तिष्ठति । २०. रा२ भ–यत्र । २१. रा१ ल१ ल२ ब अ प्र–वै ॥ २२. रा२ भ–वर्जं—चेमं । २३. रा१–श्रद्धान्वितो । २४. रा१ अ–०विशुद्धात्मा । रा२ भ–०विनिर्मुक्तो । २५. अतः परमधिकः पाठः—रा२–स्वर्णस्तेयी सुरापी च गोहंता ब्राह्मणस्य च ॥

श्लोक-पादं पठेद् यस् तु विष्णु-लोकं स गच्छति ।[१]
N] श्रद्-दधानस्[२] तु सततं भक्तश् चैव[२] वि-शेषतः ॥[३]२८॥ [N
प्रीयते भग-वान् विष्णुः स हि रामो महा-यशाः ।[४] [११७उ
N] आदि-देवो महा-बाहुर् हरिर् नारायणः प्र-भुः ।२९[४]॥[११८पू
द्वि-जश्[५] च[५] वेदान् समवाऽऽप्नुयात् सुखं
राज्यं च राजन्य-वरः सुखाऽऽगतम्[६] ।
धनानि वैश्यश् च सुखेन वै लभेत्
तथैव शूद्रोऽपि[७] परां च सद्-गतिम्[८] ॥३०[९]॥ [N
कुलस्य[१०] वृद्धिं[१०] धन-धान्य-सङ्कुलां[११]
स्त्रियश्[१२] च पुत्रान् सुखम् एव चोत्-तमम् ।
रामस्य शृण्वंश् चरितं महाऽऽत्मनः
N] प्राऽऽप्नोति सर्वाम्[१३] इह चाऽर्थ-सिद्धिम् ॥३१[१४]॥[११९
आरोग्यम् आयुष्यम् इदं[१५] यशस्यं
धन्यं महद् बुद्धि-करं सु-पुण्यम्[१६] ।[१७]
श्रोतव्यम् एतन् नि-यतं[१८] हि[१८] सद्भिर्
N] ऊर्जस्-करं[१९] वृद्धि-करं च नित्यम्[१९] ॥३२॥[१२०

---

१. रा२-एतद्दानात्प्रमुच्येत स याति वैष्णवं पदम् । भ-नास्ति । अतः परमधिकः पाठः—रा२-प्रौष्ठपद्यां पौर्णमास्यां मार्गे चैव विशेषतः । एतद्दानस्य महिमा न भूतो न भविष्यति ॥ २. म-०नस्य सततं मार्गे चैव । भ-०नस्य सततं तद्भक्तस्य । ३. फ म-नास्ति ॥ ४. रा२ भ-वर्जं—प्राप्नोति स हरेर्लोकं स महात्मा महायशाः ॥ ५. रा१ ल१ ल२ ब अ प्र-द्विजोऽपि । ६. भ-कुलाग० । ७. रा१ ल१ ल२ ब अ प्र-शूद्रस्तु । ८. रा१ ल१ ल२ ब अ प्र-संगतिम् । ९. फ म-वेदविद्भवेद्विप्रः क्षत्रियो राज्यमाप्नुयात् । धनधान्यं तथा वैश्यः शूद्रश्च सुखमाप्नुयात् ॥ १०. रा२ भ-कुटुम्बवृ० । ११. भ-०संचयं । १२. भ-श्रियश् । १३. ल१ ल२ ब-धर्मान् । रा१ अ प्र रा२-चार्थान् । १४. फ म-नास्ति । अतः परमधिकः पाठः—रा१ ल१ ल२ ब अ प्र फ म-कुटुंबवृद्धिं धनधान्यसंचयं स्त्रियश्च मुख्याः सुखमुत्तमं सदा । लभेत लक्ष्मीं विपुलां नरोत्तमो यथाभिषेकं भुवि रामलक्ष्मणौ ॥ १५. भ-०ष्यमथो । १६. ल१ ल२ ब-अत आरभ्य 'वृद्धिकरं' इति यावन्नास्ति । १७. फ-आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिविवर्द्धनं च । म-पुण्यं पवित्रं सुखदं यशस्यं सौभ्रातृकं बुद्धिविपर्ययं च । १८. फ-नियतैश्च । भ-नियतैर्हि । १९. भ-यशस्करं वृ० । रा१ अ प्र रा२-०स्करं बुद्धि० । फ म-आख्यानमूर्जस्करवृद्धिकामैः ॥

ऋषि-कृतम्[1] इति दिव्यं ह्य्[2] आदि-काव्यं[3] त्रि-लोके ।
नि-गदितम् इदम् आर्षं[4] राम-वृत्तं परा॒ऽर्ध्यम्[5] ।
रघु-कुल-वर-जन्म-ख्यापनं[6] पुण्य-कीर्तेः ।
N] दनु-तनय-निहन्तुर् लोक-नाथस्य विष्णोः ॥३३[7]॥[N

इत्यार्षे रामायणे महाकवि-वाल्मीकि-विरचिते[8] युद्ध-काण्डे[9] रामाऽभि-षेको
नाम दशोत्तरशततमः सर्गः[7] ॥ ११० ॥[8]

समाप्तश्चाऽयं युद्ध-काण्डः ।

१. भ—मुनिकृतं । २. भ—ह्यादि का० । ३. भ—आर्षं पुण्यमत्यद्भुतं च । ४. भ—वर्जे—०म्मस्थापनं । ५. फ म—नास्ति ॥ ६. ल१ ल२ अ प्र फ—महर्षिवा० । ७. ल१ ल२ ब प्र—आभ्युदयिके रा० । ब प्र—लंकाकांडे रा० । फ—आभ्युदयिके पर्वणि रामाभिषेकः समाप्तः । म—चतुर्विंशतिसाहस्र्यां संहितायां सुंदरकांडे रामराज्यवर्णनं समाप्तं । भ—वाल्मीकीये लंकाकांडं समाप्तं ॥ ८. अतः परमादर्शग्रंथानां विशिष्टा उपसंहाराः—रा१ ल१ ल२ अ प्र रा२—कांडेऽस्मिन्परिसंख्यानं कथितं तत्त्वबुद्धिना । सर्गाणां द्वे शते चैव पंचसर्गसमन्विते ॥ अष्टौ श्लोकसहस्राणि पंचश्लोकशतानि च । वृत्तांताश्च समाख्याताः सप्ततिर्द्वे च संयुताः ॥ रा१—अत्रानुक्रमणी । समाप्तोयं युद्ध-कांडो लंकापर्वगर्भः । ॐ पुराणं भारतं वापि रामायणमथापि वा । दत्त्वा यत्फलमाप्नोति पार्थ तत्केन वर्ण्यते । यत्फलं तीर्थयात्रायां यत्फलं यज्ञयाजिनाम् । कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् ॥ तत्फलं समवाप्नोति पुस्तकैकप्रदानतः । वाजपेयसहस्रेण सम्यग्दत्तस्य यत्फलं तत्फलं समवाप्नोति विद्यादानान्न संशयं । धर्माऽधर्मौ न जानाति विद्याविरहितः पुमान् । तस्मात्सर्वधर्मार्थं विद्यादानरतो भवेत् ॥ त्रैलोक्यं चतुरो वर्णाश्चत्वारश्चाश्रमाः पृथक् । ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ॥ चतुर्युगान्न (?) स राजेन्द्र एकसप्ततिसंख्यया । कल्पं विष्णुपुरे तिष्ठन्पूज्यमानः सुरोत्तमैः ॥ क्षितिं चागम्य कल्पांते राजा भवति धार्मिकः । हस्त्यश्वरथसंयुक्तो दीर्घायुर्नीरुजो भवेत् ॥ पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् । इत्यार्षे रामायणे महाकवि-वाल्मीकिविरचिते युद्धकाण्डे समाप्तं संपूर्णः । श्रीरामाय नमः । ल१—समाप्तोऽयं लंकाकांडः—ॐ शुभमस्तु सर्वजगताम् । रामः श्रीसीतारामाय सलक्ष्मणाय नमो नमः । भद्रं भद्रं भद्रं ॥ ल२—समाप्तश्चायं युद्धकांडः । ॐ तत्सत् । ॐ श्रीगणेशाय नमः । शुभं शुभं । पुराणं भारतं वापि रामायणमथापि वा दत्त्वा यत्फलमाप्नोति पार्थ तत्केन वर्ण्यते ॥ यत्फलं तीर्थयात्रायां यत्फलं यज्ञयाजिनाम् । कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् । तत्फलं समवाप्नोति पुस्तकैकं न संशयः ॥ शुभमस्तु लेखकपाठकयोः शुभं शुभं । ॐ तत्सत् ॥ ॐ श्री संवत् ९ ज्येष्ठवदीसप्तम्यां शनिवासरे इदं रामायणपुस्तकं समाप्तं शुभं । समाप्तोयं लंकाकांडः । ॐ शुभमस्तु ॥

अ–समाप्तो युद्धकांडः । शुभमस्तु । लिखितं मिश्र रामलाल वासी कोटका अकबर-मध्ये लीपी माश्रे दाउजीके ॥ प्र–समाप्तोयं लंकाकांडः । शुभमस्तु लेखकपाठकयोः । रा₂–समाप्तोऽयं युद्धकांडः । खखांकनागेंदुमिते ( १८०० ) तु वत्सरे पौषसितस्यैक-तिथौ हि सूर्यजे । अलेखीद्मीश्वर एतत्खाज्ञा शिवापतिराघनतत्परेण ॥ श्रीरामाय नमः । सीतारामचंद्राभ्यां नमो नमः । पुनरपि हनुमते नमः । श्रीराम । श्रीकोशलेंद्राधिपतये नमः । श्रीराम ॥ फ–शुभमस्तु । लंकाकांडः समाप्तः । फाल्गुणस्य पूर्णिमायां गुरुवासरे तथैव च लिखितमिदं पुस्तकं रघुनाथेन धीमता ॥ अ–आभ्युदयिकं पर्व सुन्दरकांडं चेति । अतः परमुत्तरकांडस्तृतीयो भविष्यति । यस्यायमादि श्लोकः प्राप्त राज्यस्य रामस्य राक्षसानां वधे कृते । आजग्मुर्ऋषयः सर्वे राघवं प्रति वंदितुं ॥ अस्मिन् कांडेपि संख्यानं कथितं तत्त्वबुद्धिना । सर्गाणां द्वे शते चैव पंचसर्गसमन्विते ॥ अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ॥ श्लोकाश्च विंशतिः प्रोक्ताः पद्यश्लोक-समन्विताः ॥ वृत्तान्ताश्च तथा ख्याताः सप्ततिर्हि च संयुताः । अत्रानुक्रमणी । वाल्मीकिना कारितमप्रमेयं रामायणं पापतरोः कुठारं । समग्रिमं सुन्दरकांडमे-तत्पठेद्यदीच्छेत्सुखस्वर्गसंपदं ॥ एवं ग्रन्थ संख्या ९५३५ आदर्शदोषान्मतिविभ्रमाद्वा यदर्थहीनं लिखितं मयात्र । तत्सर्वमार्यैः परिशोधनीयं प्रायेण मुह्यंति हि ये लिखंति ॥ युद्धकांड संपूर्ण शुभमस्तु । संवत् १८१० ॥ सावनमासे सुकल पंछ सप्तम्यां सोमवासरे शुभस्थान गीरी मध्ये महाराज श्री राउ खुस्याल सिंघस्य राज्यं । लिखितं वैरागी उधोदास जी ॥ यादिसं पुस्तकं दृष्ट्वा तादिसं लिख्यतो मया । जदिपि सुधमसुधं वा मम दोक्षो न दीयते । अ–शुभमस्तु ॥ सिद्धिरस्तु ॥ संवत् १७०३ समयेवैशा० ।